चार्यप्रभृति मुनिमतल्लिकानाम् सर्वदैव प्रपाठ्य
इत्ययथार्थं चेतसि निखिलाना पठतसौक
र्यार्थमस्मद्गुरुपूज्यपादानुयोगाचार्य (प) श्रीमन्
**मोहनविजय** गणिभि संशोधनकृते—

—प्रत्यन्तरकोशालब्ध्यर्थं निर्वर्तितेपि प्र-
यत्ने तु तोप्यप्राप्ते (केवलं १ स्वर्गीशासहगृ
हीत, २ स्वर्गतमुनिवर्यश्रीमत्तिविजयसत्क
केनैतनात्यशुद्धेनापि पुस्तकद्वयेन)—श्रीमद्धा-
वकपुरंगवचातुर्यचमत्कृतिचयाचितोस्मिन्प्र दे
रसिकतयैषा सान्दिग्धकतिपयपद्यान्यपि बहु
परिश्रमेण सम्बृत्य संशोधित अत एव
सर्वेषामध्ययनाध्यापनार्ह एव-श्रीमत् मुनि
कमलजैन मोहनमालाया **नवमपुष्प** रूपेण
दृग्गोचरीक्रियते

मुफ (मुद्रणपत्र) सुधारणानिवार्ये दृते
व्यायासे स्वाभाविक्या छद्मस्थस्खलनया वा
प्रवचनाशुद्धिश्चेत्संशोधयन्तु।

वीर निर्वाणतिथौ दीपावल्याम् । २४४६ — बडोदरा कोठी पोळ — इति विज्ञापयति

**प्रतापविजय**



श्री जिनाय नम

श्रीमद् यशोविजय वाचक

विरचित्ता

# मार्ग परिशुद्धिः

---

ऐन्द्रश्रेणिनताय
प्रयमाननयप्रमाणरूपाय ।
भूतार्थभासनाय
त्रिजगद्गुरुशासनाय नम ॥ १ ॥

जयति सता किमपि मुखे
जिनवचनामृतनिषेकमाधुर्यम् ।
उज्जीरति गुणगरिमा
कर्णौ यत वग्गिरा पिहित ॥ २ ॥

स्याद्वादास्वादपरा
मतिर्यन्ति हि परमतानि निरसानि ।
नहि माकन्दमुकुलभुग्
नन्दति पिचुमन्दतरुषु पिक ॥ ३ ॥

वस्तुविनिश्चयपटुना
स्याद्वादेनैव देशना देया ।
इत्युत्सर्गस्थितिरिय-
मपरा त्वपवादमर्यादा ॥ ४ ॥

१ पिहित इत्यपि । २ जानन्ति ।

अत एव दिदेश तथा
कथासु धीरो यथार्थकथनपटु ।
एकद्वित्वादिविधौ
भगवानपि सोमिलप्रश्ने ॥ ५ ॥

उत्सर्गानिश्चयतो
वाचामाचारचातुरीनिपतम् ।
तदनेकनयमयत्वे
युक्तमितरथा तु न कथञ्चित् ॥ ६ ॥

तत्त्वाद्व्यवहारा–
दयमपि येन प्रमाणतो भजते ।
अशधिया तु नयत्व–
व्यपदेशस्तत्र तज्ज्ञविदाम् ॥ ७ ॥

कुमततमोपहतदृशो
जगतो भूतार्थबोधविमुखस्य ।
आदौ दर्शयति गुरु-
र्निश्चयमविदोऽपि रामयवा ॥ ८ ॥

---

निश्चयतो निश्चयभाग्
मत्त इव भिनत्ति यश्चरणमुद्राम् ।
तस्य पदे व्यवहारो
वज्रमयी शृङ्खला क्षेप्या ॥ ९ ॥

---

अव्यवहारिणि जीवे
निश्चयनयविषयता न नास्ति ।
ऊषरदेशे धयमपि
न भवति खलु सस्यनिष्पत्ति ॥ १० ॥

व्यवहारप्रतिभासो
दुर्नयकुद्दालिकस्य भवबीजम् ।
व्यवहाराचरणे पुन-
रनभिनिविष्टस्य शिवबीजम् ॥ ११ ॥

गुरुपरतन्त्रस्यातो
माषतुषादेः प्रथमसंसिद्धिः ।
स्फटिक इव पुष्परागं
तत्र प्रतिफलति गुरुवीर्यं ॥ १२ ॥

व्यवहारवतस्तनुरपि
बोधः सितपक्षचन्द्र इव वृद्धिम् ।
इतरस्य याति हानिं
पृथुरपि शितिपक्ष[1]चन्द्र इव ॥ १३ ॥

१ कृष्णपक्ष ।

अनगतमनयोपनिषद्-
गुरुकुलवास मतो सदा सेव्य ।
आचाराङ्गे निगदित-
मा व्यवहारबीजमिदम् ॥ १४ ॥

अस्मादेव हि चरण
सिध्यति मार्गानुसारिभावेन ।
गुरुकुलवासत्यागे
नैपुण्यं भणिता कृतघ्नस्य ॥ १५ ॥

सामान्यधर्मतः खलु
कृतज्ञभावाद्विशिष्यते चरणम् ।
सामान्यविराधिनि पुन-
र्विशेषस्य स्थितिर्नेष्टा ॥ १६ ॥

२ न इयम् मार्गानुसारिता ।

तस्माद् गुरुकुलवास
श्रयणीयश्चरणधनविशुद्धिकृते ।
गुरुरपि गुणवानेव
श्लाघ्यत्वमुपैति विमलधियाम् ॥१७॥

प्रव्रज्याईगुणविधि-
प्रव्रजितो गुरुकुलाश्रितो नित्यम् ।
अक्षतशील शान्त
सत्त्वज्ञोऽवगतसूत्रार्थ ॥ १८ ॥

प्रवचनवात्सल्ययुतः
सत्त्वहितरतोऽनुवर्त्तको धीर' ।
गुर्वनुमतपदनिष्ठो
धर्मकथाकृज्जनादेयः ॥ १९ ॥




मरणनिमित्त जन्म
श्रीश्चपला दुर्लभ च मनुजत्वम् ।
न परनिमित्त निजसुख-
मिति चिन्तोत्पन्नवैराग्यम् ॥ २३ ॥



कालपरिहाणिदोषा-
न्निर्दिष्टैकादिगुणविहीनमपि ।
बहुगुणयुतमाचार्या
दीक्षायोग्य जन ब्रुवते ॥ २४ ॥



नानीदृशस्य हृदये
रमते जिनगीर्भवाभिनन्दितया।
कुङ्कुमरागो वाससि
मलिने न कदापि परिणमते ॥ २५ ॥




तदपेशल यत खलु
यालय नो चरणभावपरिपन्थि ।
कर्मक्षयोपशमज
सहितस्तदशान्तरायीन ॥ २९ ॥

नियमस्त्वतिबालाना
परिभवनीयत्वभावगाम्याऽऽराम् ।
बाला इव चेष्टन्ते
केचन गतयौवना अपि तु ॥ ३० ॥

अविवेकद्वारा खलु
यौवनमपकारि तत्त्वतस्तत् स. ।
तदभावस्ताद्विगमः
स तु न जिनैर्वारितः क्वापि ॥३ ॥

अपि चान्तरालनिष्ठा-
शङ्कि प्रागेव तन्निवृत्त्यर्थम् ।
श्रुतमभ्यस्यन्नाधिकं
कृतकृत्यो भवति बालयतिः ॥२५॥

न पुमर्थक्रमसेवा
स्वेतद्विपयव्यतिक्रमनिमित्तम् ।
यद्धर्म एव सुखदं
प्रतिपक्षावर्थकामौ तु ॥ २६ ॥

ब्रुवतेऽन्ये प्राधान्यं
मन्दप्रज्ञा गृहाश्रमस्यैव ।
उपजीवन्ति यदेनं
सर्वेऽप्यन्नादिताश्रमिणः ॥ २७ ॥

तदसदुपजीवनात
माधान्य येन लाङ्गलादे स्यात् ।
ज्ञानादिकृत त्वेतद्
व्रतिनि दृढ नो गृहाश्रमिणि ॥३८॥

---

अन्येश्वत्र जनस्य
स्वजनविरहितस्य योग्यता ब्रुवते ।
तद्विलपनादि पाप
त्यागे खलु पालनीयस्य ॥ ३९ ॥

---

तदसदिहापि हि पाप
माणवधाद्यत्सपालनेऽप्याधिक ।
आरम्भत सतत्त्वे
स्वपरविभागश्च नावगते ॥ ४०* ॥

---

* सा द्रगाथाद्वयम् ।

सत्त्वौघमव्रजतो-
रारम्भत्यागस्पष्टवातोल्यम् ।
अभ्युपगमवादोऽप
न विधित्यागेऽल्पदोषोऽपि ॥ ४८ ॥

अन्ये त्वाहु सुखिना
प्रव्रज्या फलवती न चान्येषाम्
नात्यक्तभोगविभवाः
पात्र गम्भीरभावस्य ॥ ४९ ॥

अधिकतरं प्रव्रज्या
पर्याय प्राप्य ते हि मार्गे ।
क्षुद्रप्रव्रज्यातो
लोके धर्मोपघातोऽपि

एतदपि मुग्धरिसपय–
षर न युक्तिक्षम तु मतमुच्चै ।
अविवरूपारित्यागात्
त्यागियाचिश्वयनयस्य ॥ ४४ ॥

---

अविवेरूपारित्यागात्
पालयति मुनिक्रियां स भावेन ।
सत्ताभेदात् त्यक्त–
ग्रहण ह्यविरेफशाकिञ्चनम् ॥ ४५ ॥

---

ध्वानिभेदेऽपि सपाप
मकृतर्नहित हि मधुरकादीव ।
सापेक्षस्य यवनया
तदनुमतिर्नैव विहितार्थे ॥ ४६ ॥

गुणधर्मानुपयातो
निःस्वस्याप्यपगतातिरेकस्य ।
स्तुवन्तु व्यवहारात्
युक्तो ह्युस्तत्र वाप्यर्थः ॥ ४७ ॥

प्रतिबन्धस्त्यागपरो
बाह्यतया गेऽपि गेन युक्तमयः ।
जिनधर्मोऽभिसारण-
मुभयत्यागी तु धन्यतरः ॥ ४८ ॥

इक्षुवने जिनभवने
समवसृतो [illegible]
गम्भीरसानुनादे
[illegible] रूपे सेवे ॥

शून्ये गृहेऽमनोज्ञे
न तु भग्ने ध्यामिते श्मशाने वा ।
क्षारादृगारावकरा–
मे यादिद्रव्यदुष्टे वा ॥ ५० ॥

षष्ठ्यां च चतुर्दश्या
द्वादश्यामष्टमीनवम्योश्च ।
भेषु चतुर्थ्यां सन्ध्या–
गत्यादिषु पञ्चदश्या च ॥ ५१ ॥

तिसृपूत्तरासु कुर्याद्
रोहिण्यामपि च शिष्यनिष्क्रमणम् ।
आरोपण वृताना
गणिवाचकयोरनुज्ञा च ॥ ५२ ॥

धर्मकथाक्षिप्त खलु
पृच्छेत् क कुत्र किं निमित्तमिति ।
कुलपुत्रादिप्राप्तो
भजना शेषेषु सूत्रविधेः ॥ ५३ ॥

कथयेदिह दीक्षाया-
स्त मति कापुरुषदूरनुचरतां च ।
आरम्भनिवृत्तानां
लोकद्वयसुखसमृद्धिं च ॥ ५४ ॥

आषण्मासीमुच्चै-
रभ्युपगतमपि पुन परीक्षेत ।
परिणामकमचिरादपि
दद्यादालापक सुदिने ॥ ५५ ॥

संसर्जनादिदोषा
विधिपरिभोगेन सन्ति देह इव ।
इत्थमपीहानास्था
दिक्पटनटनाटकं विषमम् ॥ ६२ ॥

---

इच्छाकारेणास्मान्
मुण्डयतेत्यथ स भणति वन्दित्वा ।
'इच्छामि' इति भणित्वा
त्रिभपठनपञ्चमङ्गलकम् ॥ ६३ ॥

---

अहोस्मिन्नोऽप्यिच्छिका
गृह्णाति गुरुस्तत स भणतीदम् ।
मम सामायिकमिच्छा-
कारेणारोपयत यूयम् ॥ ६४ ॥

---

१ प्रथमजिह्वा स्तोकेनैवमहणम् इत्यर्थः ।

इच्छाम इति भणित्वा
सार्द्धं शिष्येण सूत्रमाकृष्य ।
कुरुते कायोत्सर्गं
गुरुस्तदारोपणनिमित्तम् ॥ ६५ ॥

उत्सार्य नमस्कारो-
च्चारेणैतेन सह गुरु सूत्रम्
पठति त्रिरथ शिष्योऽ-
प्यनुपठति विशुद्धपरिणामम् ॥ ६६ ॥

यासानभिमन्त्र्य गुरु-
स्ततश्च जिनसाधुपादयोर्दत्ते ।
दापयति तत' शिष्यं
वन्दनक भणति वन्दित्वा ॥ ६७ ॥

संसर्जनादिदोषा
विधिपरिभोगेन सन्ति देह इव ।
इत्यमपीहानास्था
दिक्पटनटनाटक विपयम् ॥ ६२ ॥

---

इच्छाकारेणास्मान्
गुरुरयतेत्यथ स भणति वन्दित्वा ।
' इच्छामि ' इति भणित्वा
त्रिभपठनपञ्चमङ्गलकम् ॥ ६३ ॥

---

अष्टोत्सिक्तोऽप्यच्छिन्ना
गृह्णाति गुरुस्तत स भणतीदम् ।
मम सामायिकमिच्छा-
कारेणारोपयत यूयम् ॥ ६४ ॥

---

१ प्रथम अंगो स्याकेन्दामरणम् इत्यथ ।

इच्छाम इति भणित्वा
सार्द्धं शिष्येण सूत्रमाकृष्य ।
कुरुते कायोत्सर्गं
गुरुस्तदारोपणनिमित्तम् ॥ ६५ ॥

उत्सार्य नमस्कारो-
च्चारेणैतेन सह गुरुः सूत्रम्
पठति त्रिरथ शिष्योऽ-
प्यनुपठति विशुद्धपरिणामम् ॥ ६६ ॥

वासानभिमन्त्र्य गुरु-
स्ततश्च जिनसाधुपादयोर्दत्ते ।
दापयति तत शिष्य
वन्दनकं भणति वन्दित्वा ॥ ६७ ॥

सन्दिशत किं भणामी
स्येव प्रवेदय गुरुभ्य वन्दित्वा।
इति भणति ततार्द्धाऽऽ
नततनु स भणतीदमुपयुक्त. ॥६८॥

युष्माभि सामायिक
मारोपितरूमनुशास्तिमिच्छाम ।
शीर्षे शिष्यस्यैव
गुरुराह ददतो वासान् ॥ ६९ ॥

वर्द्धस्व गुरुगुणैस्त्व
निस्तारपारग प्रवेदित किम्।
तुभ्य प्रवेदयामि
स भणति च सन्दिशत साधूनाम॥७०॥

अन्ये तु जिनादीना
वासान् ददतीह भणति वन्दित्वा ।
सूरिं प्रवेदयेति
प्रदक्षिणां शिष्यकः कुरुते ॥ ७१ ॥

स नमस्कारोचारं
वासानथ सूरिसाधवो ददति ।
कार्यः त्रिवारमेव
पुनरप्युत्सर्गमेकं तु ॥ ७२ ॥

आचामाम्ले नियम
च(च)रन्ति किल सश्रिता निशावालि-
काम् ।
निपतति शिष्यः पदयो
ततश्च जिनसाधुसूरीणाम् ॥ ७३ ॥

वन्दन्ते च तपन्ये
गुरुरप्युपदिशति धर्मसर्वस्वम् ।
शीलमोक्षनिदाने
भासे कार्ये प्रमादो नो । ७४ ॥

---

व्यभिचारात् क्रियोन
क्रियाकलापेन परमपदसिद्धौ ।
विरतौ सत्यां विफल-
स्तदसत्त्वेय मृषा भूमि ॥ ७५ ॥

---

नैव विरत्युपाय
प्राप्तो यदय जिनोक्तलिङ्गविधि ।
इत्य क्रिया परिणता
पर्याप पालयन्ति बुधा ॥ ७६ ॥

निरते सरेऽप्येतच्च
वृथाज्ञासङ्गतं क्रियान्तरवत् ।
विधिकारयितु शुद्धाद्
भावादगुणो न तदभावे ॥ ७७ ॥

विषये युक्तोऽपि गुरो-
र्विनिशा मन्त्राजने गुणो भावात्
तदभावे परभावा-
ज्ञातादिह तीर्थविच्छित्ति ॥ ७८ ॥

न च गृहवासत्याग
पापात् सक्लेशलिङ्गरू यत्तत् ।
स च तत्र इन्त त्रिपुल-
स्तदभावेनाप्यसन्नस्य ॥

गेहादौ सत्येप
प्रसरति पापानुबन्धिनः पुण्यात् ।
सत्पापमेव पुण्या-
नुबन्धि तत्त्यागिनां योगे ॥ ८० ॥

धर्मध्याननिमित्त
परिशुद्ध तद्विरक्तगुणहेतु ।
पुण्यानुभपरिणामा-
नपायिनी वेदनाऽप्यत्र ॥ ८१ ॥

येन क्षुदादय खलु
कर्मक्षयकारणानि भावयते ।
ज्वरिणामिह बाधन्ते
कटुकौषधपानमिव न मन ॥ ८२॥

नैकान्तोऽप्यत्र तपो
नियमविधेर्व्यसनिरपि च क्षान्तानाम् ।
आत्मैवात्मादिविधौ
न च लोभ इतीह को दोष ॥ ८३ ॥

शीतोदकाद्यभोगोऽ
प्यत्र न दानान्तरायकारणक ।
किन्तु विपाकपटुकर्ता
मत्वा तद्दर्शन युक्तम् ॥ ८४ ॥

चारित्रविहीनाना–
महानवतां तु येदृशी चेष्टा ।
अभिपङ्केरूपराणां
सा प्रतिषिद्धा जिनवरेन्द्रैः ॥ ८५ ॥

आविधिपरिपालनादे–
यैर्मुषित प्राणिना तु धर्मधनम् ।
पापानुबन्धिपापात्
भाढे तेषामसद्रिसा ॥ ८६ ॥

---

सद्ध्यानादेर्विरहे
गृहवासससत्वतोऽन्यथा क्षीसा ।
प्रव्राजकस्य न तत
सद्वैद्यस्येव दोषोऽपि ॥ ८७ ॥

---

इत्य प्रव्रजित सन्
सूत्रोक्तां प्रतिदिन क्रिया कुर्वन् ।
चारित्रेतरसमर्थो
मुनिव्रतस्थापनार्हं स्यात् ॥ ८८ ॥

अधिगतशास्त्रपरीक्षा-
सूत्रार्थोऽनुक्तवर्णको योग्य ।
पञ्च स निर्विशुद्ध
नवभिर्भेदैः परिहरेच्च ॥ ८९ ॥

अप्राप्तेऽधर्मकथय-
ननभिगतार्थेऽपरीक्षिते यस्तु ।
स्थापयति व्रतभार
प्राप्नोत्याज्ञाविरोधमसौ ॥ ९० ॥

शैक्षस्य भुवस्तिस्र
सप्ताहोरात्रका जघन्याऽत्र ।
षण्मासिक्युत्कृष्टा
मध्यमिका स्याच्चतुर्मासा ॥ ९१ ॥

भूम्यातस्वाभाविक-
जनुषो दर्दुरकवज्जल च तथा।
व्योमोद्भवस्य पातात्
स्वभावतो मत्स्यवद्वापि ॥ ९८ ॥

आहारादनलोऽपि च
वुद्धिविकारोपलम्भतो व्यक्तम्।
अपर प्रेरितर्य-
गतेः सचित्तश्च वायुरपि ॥ ९९ ॥

जन्मजरामृतिजीवन-
रोहणरुग्णैर्हृदैस्तथाहारात्।
रोगचिकित्सादिभ्यो
नार्य इव सचेतनास्तरव ॥ १०० ॥

त्रसजीवस्य व्यक्तं
तत्पालनतो व्रतानि मूलगुणा
प्राणातिपातविरमण-
मुख्या षट् चरणं तु भूमौ ॥१०१॥

एकेन्द्रियादितापन-
सङ्घट्टनपीडनादिना प्रथमे।
प्रचलाक्रोधादिभ्यः
सूक्ष्मोऽन्यश्च द्वितीये स्यात् ॥१०२॥

ग्रंथानाभोगादे
सधर्मकाधमदत्तहरणे च।
अस्तेये ब्रह्मण्यपि
करकर्मणि गुप्त्यरक्षायाम् ॥ ३ ॥

१ धादिरवमेतत्, अत्र तु 'चारणात्म' इति पाठः सम्भवति पर काव्यादर्शेऽस्मात् तथैव न्यस्त।

अतिचार पञ्चमके
सूक्ष्म काकादिरक्षणाज्ज्ञेय ।
कल्पाष्टके ममत्व-
द्रव्यादिग्रहणतश्चान्य ॥ ४ ॥

ज्ञानाद्यनुपकृतिकृतो
धरणे वा वस्तुनोऽतिरिक्तस्य ।
षष्ठे च चतुर्भङ्गी
दिवागृहीतादि निष्पन्ना ॥ ५ ॥

उदकार्द्रादिपरीक्षां
कुर्यात् कथनोत्तर च गीतार्थो ।
परिहरति नोदके वा
योग्यत्वमनीदृशे भजना ॥ ६ ॥

कायोत्सर्गयोगो-
पस्थापनचैत्यवन्दनादिविधौ ।
कृत्वा गुरवो वामे
पार्श्वे सस्थाप्य त ददते ॥ ७ ॥

एकैकं त्रीन् वारान्
व्रतमत्र स्थानविषयमिममाहुः ।
पट्टमुखवस्त्रकूर्पर-
वामकरानामिकाग्रहणम् ॥ ८ ॥

अपि हस्तिराजदन्तो-
न्नतहस्ताभ्यां रजोहरणधरणम् ।
प्रादक्षिण्य चाग्निपि
गुरोरियं स्यात् परीक्षापि ॥ ९ ॥

ईषदवनतभ्रमता-
मभिसरणे हृद्भिरपहृतौ हानिः ।
साधूना द्विविधा दिक्
साध्वीना तिस्र एवा स्यु ॥ १० ॥

आचामाम्लादि तपः
शक्त्या तत्समक तु मण्डल्याः ।
उपदेशयेत् परिणत
नो चेद् गुरोर्विराधकता ॥ ११ ॥

गुरुगच्छवसतिसङ्गा-
हारोपकरण तपोविचारेषु ।
भावनविहारमुनिवर-
कथासु यतते च परिणामी ॥ १२ ॥

इष्यो नृपमिव शिष्य
सेवेत गुरु ततो विनय वृद्ध्या ।
सद्दर्शनानुरागा-
दपि शुद्धिर्गतिमस्येव ॥ १३ ॥

---

गुरुसेवाभ्यासवतां
शुभानुबन्धो भवे परत्रापि ।
तत्परिवारो गच्छ-
स्तद्वासे निर्जरा विपुला ॥ १४ ॥

---

स्मारणवारणनोदन-
विनयकरणकारणादिनाऽस्याउय. ।
विधिना तस्य तु विरहे-
च्छाऽयमपठच्छात्र तुल्यगुणा ॥१५॥

इत्य यतमानोऽपि
स्त्रीरागेणाभिबाध्यते स यदा ।
भावयति तदा सम्यक्
विषयस्त्रीसङ्गवैषम्यम् ॥ २५ ॥

मासादिविहारेण च
विवहरेदादिस्तु चक्ति कार्येण ।
न्यूनत्वादि विहार-
ध्रौव्य त्विह मोहशान्त्यर्थम् ॥ २६ ॥

इत्य च पुज्यवेदो
रोगचिकित्सातिचारवदिहापि ।
रौद्रविपाकेऽपि गति
मतीतविपरीतभावतति ॥ २२ ॥

नालोचनादि मात्र
प्राक्षयादेरपि हि येन तद्भाव ।
स प्रतिकारविपोतम-
गसुखाव न सातिचारमद ॥ २३ ॥

इत्य विचारत स्यात्
सवेगातिशयतश्चरणवृद्धि ।
दुरान्यथा प्रवृत्ति
भा ॥ २४ ॥

इत्थं यतमानोऽपि
स्त्रीरागेणाभिबाध्यते स यदा ।
भावयति तदा सम्यक्
विषयस्त्रीसङ्गवैषम्यम् ॥ २५ ॥

मासादिविहारेण च
विचरेदादिस्तु वक्ति कार्येण ।
न्यूनत्वादि विहार-
श्चौल्य त्विह मोहशान्त्यर्थम् ॥ २६ ॥

नित्यवसतिरपि परिणत-
गुर्वादीनां तु कारणेन स्यात् ।
द्रव्यत एव न भावा-
दागमयतना विशुद्धधियाम् ॥ २७ ॥

भाषा मृषान्यथा तु
प्रवचननिन्दा च शिष्यगुणहानिः ।
तीर्थोच्छेदश्चेति
स्वल्पाध्ययनेन योग्यत्वम् ॥३१॥

---

कालोचितसूत्रार्थे
तस्मात्सुविनिश्चितस्य युक्तोऽय ।
श्रवणादेव न यदिय
'सम्मत्यां' सिद्धसेनोक्ति ॥ ३२ ॥

---

" जह जह बहुस्सुओ
सम्मओ अ सीसगणसपरिवुडो अ ।
आविणिच्छिओ अ समए
तह तह सिद्धतपडिणीओ ॥ ३३ ॥

दपवादोत्सर्गविषयवित्सम्यक्
अविषयदेशनया च
स्वपरविनाशी स नियमेन ॥ ३४ ॥

अनुयोगविधिश्चाय
सुतिथौ गुरुरगविशेषेशिष्यायाम् ।
रचितायां कथितायां
पुरत शिष्यो यथा जात ॥ ३५ ॥

उपकरणत उपयुक्त-
स्ततो गुरु मन्युपेश्वे विधिना ।
मुखवस्त्रिकां स शिष्य
सशिर काय तथा चापि ॥३६॥

झ

आरर्चैद्वादशाभि-
र्वन्दनदानेन भणति शिष्योऽथ ।
सन्दिशत स्वाध्याय
स्वस्था प्रस्थापयाम इति ॥ ३७ ॥

प्रस्थापयेत्यनुमते
प्रस्थापयतो ततश्च गुरु ।
तिष्ठन्निवेदितेऽस्मिन्
प्रस्थापयतोऽनुयोग द्वौ ॥ ३८ ॥

अनुयोग गुरुणाथो
शिष्योऽनुज्ञापयेच्च वन्दित्वा ।
अभिमन्त्र्याक्षान् देवान्
वन्देत गुरुस्ततो विधिना ॥ ३९ ॥

सनमस्कारनन्दी-
मारूर्ययति स्थितोऽथ परिपूर्णाम् ।
शिष्यः शृणोति भावा-
न्नन्दीमाकृष्य भणति गुरुः ॥४०॥

अनुयोगमस्य साधो
क्षमाश्रमणहस्ततोऽहमनुमाने ।
पर्यायद्रव्यगुणै-
सोऽनुज्ञातोऽथ वन्दित्वा ॥ ४१ ॥

सन्दिशत किं भणामी-
त्यादि मामवद्ददेदिह विशेष ।
अधिकाशीरन्येषां
धारय सम्यग् प्रवेदय च ॥ ४२ ॥

गुरुरुपविशति कृतत्रि-
प्रदक्षिणे शिष्यके तनूत्सर्गे।
विहिते चानुज्ञार्थं
स निषद्य गुरु प्रदक्षिणयेत् ॥४३॥

तत उपविष्टस्य गुरु-
स्त्रीन् वारान् स्वान्तिके सुशिष्यस्य।
कथयति मन्त्रपदानि
सापरम्परया गतान्येव ॥ ४४ ॥

दत्ते सुगन्धमुष्टी-
स्त्रीनक्षाणां प्रवर्द्धमानांश्च।
तद्ग्राहिणं च शिष्यं
स्वनिषद्यायां निवेशयति ॥ ४५ ॥

त वन्दतेऽथ स मुनि-
गुरुः स्वशक्त्या स देशनां दत्ते ।
तुल्यगुणदीपनार्थं
नैतद्दुष्टं द्वयोरपि हि ॥ ४६ ॥

प्रणमन्ति ततो मुनयो
गुरुस्तत्र स्वासनस्थितस्तस्य ।
कुरुते गुणप्रशंसा-
मन्ये तु प्रथममेवाहुः ॥ ४७ ॥

अयमनुयोगी प्राज्ञ
प्रवचनकार्येषु नित्यप्रयुक्तः ।
योग्येभ्यो व्याख्याता
दद्यात्सिद्धान्तविधिनैव ॥ ४८ ॥

मध्यस्था बुद्धियुता
मार्त्ता धर्मार्थिनश्च योग्या स्यु
इह मार्जनादिपूर्वं
विषयस्थापना च विधि ॥ ४९ ॥

---

व्याख्यातसमभाव
श्रोतु परिभाव्य योग्यताभेदम् ।
अपि दृष्टिवादभेद
निर्व्यूढं वा तत सूत्रम् ॥ ५० ॥

---

सम्यग्धर्मविशेषो
यत्र कषच्छेदतापपरिशुद्धः ।
कथितस्तन्निर्व्यूढ
वरश्रुतस्तत्त्वपरिज्ञादि ॥ ५१ ॥

कल्याणान्यत्र स्यु
पुंस सम्प्राप्तमोक्षबीजस्य ।
सुरमनुजेशसुखानि
मतिपूर्णसुखानुबन्धीनि ॥ ५५ ॥

भूतार्थश्रद्धान
सम्यक्त्वं मोक्षबीजमत्राहुः ॥
भूतार्थवाचकात्त-
च्छ्रुतान्ताच्चदाप्तस्य वचन तु ॥५६॥

ननु तदपि ततो न स्यात्
व्यभिचारस्योपलम्भतो व्यक्तम् ।
यदनन्तश श्रुतानि
श्रुते श्रुता द्रव्यलिङ्गवताम् ॥ ५७ ॥

१ श्रुतागम इ।

सत्य तत्मासन्नापि
वीर्यं नोल्लासितमेव जीवस्य ।
हेतुश्च तदुल्लासे
भाय श्रुतमेव को दोष ? ॥ ५८ ॥

---

असकृदपि साराधे
माक्षैरमाम्रेयपरिणाम ।
वेध शुद्धिं च यथा
जात्यमणिर्याति तैरेव ॥ ५९ ॥

---

अकलितवीर्योल्लास-
स्तया श्रुतादप्यनन्तश साक्षात् ।
लभते वीर्योल्लास
मन्य शुद्धिं च तत एव ॥ ६० ॥

अस्यैव हि स्वभावो
यदतीतेषु श्रतादियोगेषु ।
लभते ऽ.योल्लासं
भव्य शुद्धिं च वृद्धिं च ॥ ६१ ॥

नैवं स्वभाववाद
स्याद्वादेऽन्तरभावय दोषाय ।
सहकारितचाचित्र
भव्यत्व च स्वभावोऽत्र ॥ ६२ ॥

तदचित्रत्वे सिद्धे ( द्धि )
कालादिभिदा कदापि न घटेत ।
कर्मादिभिरपि तदु-
पक्रमे तांचित्रताबीजम् ॥ ६३ ॥

नो चेदभव्यजीव-
स्वभावमपि तानि किं न विजयेरन्।
तद्व्यापाराभावेऽ
प्यस्मिन्नभिव्यक्ता बीजम् ॥ ६४ ॥

तत्रैव तानि किञ्चित्
फलमथ जनयन्ति नापरत्रेति
ननु तेष्वेव स्वभावो
भिदां व्रजेदाश्रयेऽप्येवम् ॥ ६५ ॥

विनिगमका भावादपि
हेतूनामिति फले मिथोऽपेक्षा ।
इत्यमभिप्रेत्यैतत्
'सम्मत्यां' निजगदे सुधिया ॥६६॥

" कालो सहाव णियई
पुव्वकयं पुरिसकारणेगंता ।
मिच्छत्त ते चेव उ
समासओ होंति सम्मत्त ॥ ६७ ॥ "

तदपि न चित्रत्व चे-
दनेकजननैकस्वभावत्वात् ।
क्षणिक समर्थात् स्वफलो-
पनतेरपि च प्रतिव्याक्ति. ॥६८॥

नैवं नायान्तरतः
स्याद्वादोपगमपर्यवसितत्वात् ।
एकान्तस्याघटनात्
विल्कपत कात्स्न्र्यदेशाभ्याम् ॥६९॥

तस्यैव तथा भवने
नो इत्तु पार्यतेऽन्वयोर्यौनाम् ॥
व्यतिरेकोऽपि क्रमिक-
स्वकार्ययोगादितीय दिक् ॥ ७० ॥

स्याद्वादादित्यमय
वीर्योल्लास क्रमात् समासाद्य ।
सम्यक्त्व द्रव्याख्य
भावं चरण च शिवमेति ॥ ७१ ॥

द्रव्याख्य सम्यक्त्व
जिनवचन तत्त्वमिति रुचि परमा ।
भूतार्थबोधशक्त्या
परिणमते भावसम्यक्त्वम् ॥ ७२ ॥

अज्ञातगुणे सम्यक्
या श्रद्धा भवति सुन्दरे रत्ने
हन्त ततोऽनन्तगुणा
विज्ञातगुणे पुनस्तस्मिन् ॥ ७३ ॥

प्रशमादिलिङ्गजनकं
शिवबीजं तेन भावसम्यक्त्वं
श्रुतधर्मस्तद्धेतु
परीक्षणीयस्ततो यत्नात् ॥ ७४ ॥

सूक्ष्मोऽस्त्यशेषविषयः
सावद्ये यत्र कर्मणि निषेध ।
रागादिकुट्टनसहं
ध्यान च स नाम कषशुद्धः ॥ ७५ ॥

नो कार्या परपीडा
यथाऽत्र मनसा गिरा च वपुषा च।
ध्यातव्य च नितान्त
रागादिविपक्षजाल तु ॥ ७६ ॥

स्थूलो न सर्वविषय
सावद्य यत्र कर्मणि निषेध ।
रागादि कुट्टनसह
न ध्यानाद्यपि तदशुद्ध ॥ ७७ ॥

बहुभि पञ्चभिरेका
हिंसाऽत्र यथा मृषाविसवादे ।
ध्यानेन ध्यातव्यम्
तत्त्वमकारादिक चेति ॥ ७८ ॥




यदन्यैरुक्तम्—" अनास्थपतां
शकटमरणैको घात "
तथा—" प्राणी प्राणिज्ञानं
घातकचित्त च तद्गता चेष्टा।
प्राणैश्च विप्रयोग
पञ्चभिरापद्यते हिंसा ॥"
तथा—" असन्तोऽपि स्वका दोषा ।
पापशुद्ध्यर्थमीरिता ।
न मृषायै विसंवाद-
विरहाच्चस्य कस्यचित् ॥"
तथा—" ब्रह्माकारोऽत्र निक्षेप
अकारो विष्णुरुच्यते ।
महेश्वरो मकारस्तु
त्रयमेकत्र तत्त्वतः॥७९॥" इति

नित्योद्युक्ततया या
सयमयोगेषु विविधभेदेषु ।
वृत्तिर्धार्मिकसाधो-
स्तद्बाह्य स्यादनुष्ठानम् ॥ ८० ॥

---

एतेन विधिनिषेधौ
याप्येते यत्र नैव नियमेन ।
सम्भवत परिशुद्धौ
ह्युचते त छेदपरिशुद्धम् ॥ ८१ ॥

---

समितिषु पञ्चसु च यथा
तिसृषु च गुप्तिषु सदाऽप्रमत्तेन ।
विधिना यतिना कार्ये
कर्त्तव्य कायिकाद्यपि हि ॥ ८२ ॥

अपि च प्रमादजनका-
स्त्याज्या वाधादय परम्परया ।
मधुकरवृत्त्या भिक्षा
लब्ध्यात्मा पालनीयश्च ॥८३॥

य प्रमादयोगात्
स-प्रयोगेषु विविधभेदेषु ।
नो धार्मिकप्रवृत्ति-
र्भवते खलु तदननुष्ठानम् ॥८४॥

एतेन यत्र बाध्यौ
वर्द्धेते नैव विधिनिषेधौ च ।
छेदेनापरिशुद्ध
त ग्रथ माहुराचार्या. ॥ ८५ ॥

सङ्गीतकादि कार्यं
देवानाम्रुद्यतो यथा नु यते ।
अपि चान्यधर्मिणा-
मुच्छेदोऽसभ्यवचन च ॥ ८६ ॥

---

यदन्यैरुक्तम्—" सङ्गीतकेन देवस्य
मत्सरावरणक्षयत ।
तत्प्रीत्यर्थमतो यत्न-
स्तत्र कार्यो विशेषत ॥"

तथा—" अन्यधर्मास्थिता मत्त्वा
असुरा इव विष्णुना ।
उच्छेदनीयास्तेषां हि
वधे दोषो न विद्यते ॥ "

तथा—'ब्रह्मघातकोऽहम्'इत्यादि वचनात्
तद्वेदनीय कर्मक्षय इति ॥
जीवादिभाववादो
छेदेष्टाभ्यां न च खलु विरुद्ध ।
तापविशुद्धः सोऽन्यो
द्वाभ्यामपि नैव शुद्ध स्यात् ॥८७॥
इह सदसदादिरूपे
जीवे बन्धादि युज्यते सर्वम् ।
नानीदृशे तु किञ्चित्
वरश्रुत शुद्धमित्य तत् ॥ ८८ ॥
मुख्योपचाररूप-
स्तवो द्विधा द्रव्यभावतो यत्र ।
वर्ण्यते उचितक्रमतः
सा कथितास्तत्रपरिज्ञेति ॥ ८९ ॥

भावस्तवो यतीना
क्रियाकलाप स्मृतो निरतिचार
जिनभवनविधानादि
द्रव्यस्तव एव विनिशुद्धम् ॥ ९० ॥

द्रव्यस्तवभावस्तव-
रूप ह्यन्योन्यसमनुविद्ध तु।
गृहिणोपि भावयागो
भगवद्गुणरागतो भूयात् ॥ ९१ ॥

द्रव्यस्तवश्च साधो-
रप्यनुमोदनकृतो न नास्तीति।
विहित कायोत्सर्गे
सूत्रे यद्वन्दनाद्यर्थे ॥ ९२ ॥

इत्यादिमत्रसरणे
न च गत प्रतिषिद्धमर्हता जातु ।
तस्मात् सोऽनुज्ञातो
योग्यानां गम्यते न्यायात् ॥ ९३ ॥

---

अनुजानीते नार्हन्
योगं गणविगुणं कदाचिदपि ।
तदनु गुणोऽय न पुन-
र्नान्येषां बहुमतो भवति ॥ ९४ ॥

---

भावस्य योऽपि लेश-
स बहुमतो भगवता गुणज्ञेन ।
द्रव्यस्तवेन न विना
स इत्यसावर्थतस्तादृक् ॥ ९५ ॥

कार्यं सत्त्वभिलषताऽ-
नन्तरमपि कारणं समभिलषितम्।
आहारजतृप्तिमिवा-
भिवाञ्छता नूनमाहारं ॥ ९६ ॥

जिनभवनकारणाद्यपि
भरतादिनां न रागित तत्र।
तेषां यथैव कामा
शल्यविषादिभिरुदाहरणे ॥ ९७ ॥

अनुगतमिदमपि तस्मा-
दप्रतिषेधेन तान्त्रिकन्यायात्।
शेषाणामप्येव
सङ्गतमस्यानुमत्यादि ॥ ९८ ॥

यश्चतुर्धा नियतो
भणितस्तत्रोपचारिको यश्च ।
स हि तीर्थकरे नियमात्
न भवेद्द्रव्यस्तवादन्य ॥ ९९ ॥

---

सूत्रे हि पूजनादि-
रेतत्सम्पादनार्थमुपचारः ।
नो चेत्तदर्थतस्त्व
भावात्तु न भावस्तवोऽसौ ॥ २०० ॥

---

साक्षादपि गृहीणां
पुनरयमुचितो भावकारणत्वेन ।
आरुध्यते यतीनां
कारणमपि देशना चात्र ॥ २०१ ॥

नन्वेव हिंसाऽपि हि
धर्माय न दुष्यतीति सम्मासम्
एव च वेदविहिता
हिंसाऽनिष्टेति को मोह ॥ २०२ ॥

इह समता पीडाया
परिणामसुखस्य चापि हिंस्यानाम् ।
अपि पापपुण्यजनने
व्यभिचारो वैद्यजाराभ्याम् ॥ २०३ ॥

स्यात्तत्र शुभो भावो
अन्वयमितरत्र तुल्यतामेति ।
एकेन्द्रियादिभेदा–
द्विशेष' कोऽपि विहितविधेः॥२०४॥

एतदपि न मुक्तिसह
वाङ्मात्रस्याप्रयोजकत्वेन ।
संसारमोचकाना-
मपिधर्मं स्यादपरथा तु ॥ २०५ ॥

एकस्य न सम्यक्त्वे
विनिगमनालोकतो विगानाच्च ।
स्तोकस्यापि विगाने
व्यभिचारादेशभेदेन ॥ ६ ॥

अविगानमपि बहूनां
मूढतरभावतो न विनिगमकम् ।
नीरागश्च न कश्चिद्
भवेदसर्वज्ञवादिमते ॥ ७ ॥

म्लेच्छानामप्येव
वाङ्मात्राद्धर्म्मरुहा न स्यात् ।
द्विजवरमपि घातयता
पुरतो ननु चण्डिकादीनाम् ॥ ८ ॥

अन्यतरारूढस्य
सममुभयनाप्यगस्कारस्य च
उत्सन्नशास्त्रवेदा-
यज्ञापि निवर्तते नेह ॥ ९ ॥

तस्मान्न वचनमात्र
प्रवृत्तिहेतुर्भवेद्बुधजनानाम् ।
किन्तु तथा दृष्टेष्टा-
विरोधितत्सम्भवद्रूपम् ॥ १० ॥

द्रव्यस्तवादुपयोद्वे-
र्भावापत्कल्पगुणयुताच्चैरान ।
जिनभवनकारणादे-
रुपकार. पीडयाऽपीह ॥ ११ ॥

सर्वत्र सदाभावे
भावापदि भगवतां हि जीवानाम् ।
तन्निस्तरणसमर्थ
नियमेनायतनमेतेषाम् ॥ १२ ॥

पुरुपोत्तमप्रतिष्ठा
साधुनिवासश्च देशना स्यान्नु ।
एकैकं मावाप-
न्निस्तरणगुण हि भव्यानाम् ॥ १३ ॥

इत्थ पृथ्व्यादीना
पीडाकृदपीह सङ्गता हिंसा ।
अन्येषां गुणसाधन-
योगात् सत्यसससिद्धात् ॥ १४ ॥

---

आरम्भवतश्चासा-
वारम्भान्तरनिवृत्तिश्च भाय ।
इत्थ निदानरहिता
कथिता नि श्रेयसफलाय ॥ १५ ॥

---

व्यवहारवचनमेत-
न्निश्चयतो नैव धन्यनोपाय ।
मोक्षोपाय कथमपि
परस्परविरुद्धभावेन ॥ १६ ॥

शुद्धेतरपरिणामौ
निश्चयतो मोक्षबन्धनोपायौ ।
अत्याज्य' सन्निधाना
परपरिणामा उदासीना ॥ १७ ॥

सम्यक्त्वचरित्रे यत्
तीर्थकराहारबन्धके तूक्ते ।
नो योगकषायाणां
व्याप्त्या वैशिष्ट्यमात्रेण ॥ १८ ॥

तदिह यदंशे सम्यक्
गुणप्रकर्षो न तेन बन्धोऽस्ति ।
अविरतपक्षेनासा–
वविशिष्टो निष्फला हिंसा ॥ १९ ॥

भक्त्या च व्यवहार
सान्निध्यात् स्यात्तथा घृत दहति
इत्थ च फल्गुहिंसा
गुणयोगान्मोक्षफलदोक्ता ॥ २० ॥

---

तस्मान्नाधर्मोऽस्यां
वैधज्ञानेन भवति गुणभागत्तु ।
आपस्तु गुणाद्‌ऽन्या
निद्दाचितो वैदिकी नैवम् ॥ २१ ॥

---

भूत्यादिफलोद्देश-
प्रवृत्तितो मोक्षसाधिका नापि ।
मोक्षफल च सुचयन
शिष्ट त्वर्थादिवचनसमम् ॥ २२ ॥

अग्निर्यामेतस्मान्–
पुन्वत्त्वेनस इति श्रुतिश्चेह ।
अन्धेतमसीत्यादि
स्मृतिरपि सूचयति दुष्टत्वम् ॥ २३ ॥

मानाभावात् कल्प्यं
नाम्नान्यार्थत्वमपि च बुद्धिमता ।
प्रकृते च (न) प्रवचने
श्रूयन्ते पापवचनानि ॥ २४ ॥

अनुपन्यस्यपनिष्ट
परिणामसुखं च हिरण्यानानाम।
स्पेष्टविरुद्धार्थो–
स्तुपभावो भवेदभावमयः ॥ २५ ॥

एकेन्द्रियादिभेदोऽ
प्यविशेषेसपकृचवा(या)पि स्यात् ।
शूद्रसहस्रेऽपि हते
यन्न मता ब्रह्महत्येति ॥ २६ ॥

यतनातोल्पेयमपि
ध्रुव च सा सर्वधर्मसर्वस्वम् ।
परिणतजलदलशुध्या
सा च महार्थव्ययादत्र ॥ २७ ॥

इत्थ खलु निर्दोष
शिल्पादिविधानमपि जिनेन्द्रस्य ।
दुष्टमपि लेशत मत्
बहुदोषनिवारकत्वेन ॥ २८ ॥

सर्वाधिकाभवोऽसौ ।
सर्वोत्तमपुण्यसंयुतो भगवान् ।
एकान्तपरहितरतो
विशुद्धयोगो महासत्त्व. ॥ २९ ॥

---

यद्बहुगुण मजाना
नद् मात्वा मत्तु तथन दर्शयति ।
तत्तद्रक्षणकर्त्तु-
र्यथोचितं को भवेद्दोष. ॥ ३० ॥

---

भवस्तत्र शुभतरो
बहुदोषनिवारणेह विश्वगुरा ।
नागाद्येराकर्षण-
दोषेऽपि यथेह शुभयोगः ॥ ३१ ॥

एव निवृत्तिसारा
हिंसेय तत्त्वतस्तु विज्ञेया ।
यतनाविधिशुद्धिमत
पूजादिगतापि च नयैव ॥ ३२ ॥

---

अनुपकृता अपि पूज्या-
श्चिन्तामणिवत्फल प्रयच्छन्ति ।
अधिकनिवृत्तिश्चास्या
भावेनाधिकरणत्यागात् ॥ ३३ ॥

तद्गुणकृदिय हिंसा
सर्वज्ञगिरां च सम्भवद्रूपा ।
निश्चिततदुक्तसमया-
गतात्सुधीसम्प्रदायाच्च ॥ ३४ ॥

देववचनं च नैवं
न पौरुषेय मत यवस्तद्धि ।
इदमत्यन्तविरुद्ध
वचन चापौरुषेयं च ॥ ३५ ॥

---

क्वचिदपि न श्रुतपूर्वैः
पुरुषव्यापारविरहितं वचनम् ।
गगनेऽपि च नाशङ्क्या
विलीयते हस्तगर्तगदा ॥ ३६ ॥

---

नैदं किं वर्णानां
लोके दृष्टं न पौरुषेयत्वम् ।
अपि तत्प्रकाशशक्ते-
रनिश्चयान्निश्चयो न ततः ॥ ३७ ॥

नेयन्तृमात्रगम्या
तदतिशयो बहुमतो न युष्माकम् ।
लौकिकवाग्भ्यो दृष्ट
कथञ्चिदत्रापि वैधर्म्यम् ॥ ३८ ॥

समयाभिधा न च स्व-
प्रकाशकत्व विरार्थनियम न ।
इन्दीवरे हि दीप
शोणत्वमसत् प्रकाशयति ॥ ३९ ॥

मूलच्छेदाद्बोधो
नवा सुधि सम्प्रदायतोऽप्यन ।
अन्धेनान्धानयन-
मायो गुरुशिष्यबोधो यत् ॥ ४० ॥

अस्माकं च न दोष
सर्वज्ञे वचनपूर्वकेऽपि मति ।
पीजाङ्कुर वदनादे-
र्नियमाद्धर्माश्रिताद् भावात् ॥ ४१ ॥

हिंसादोषादि न तत्
सर्वत्रास्मिन्नसम्भवद्रूपे ।
नहि रत्नगुणोऽरत्ने
नास्थाने तत्र च स्थाप्य ॥ ४२ ॥

भूतवध खलु वेदो
निषिध्य न नियमयन् फलोद्देशात् ।
फलभावेऽप्युत्सर्गं
त्यागे दोष निवेदयति ॥ ४३ ॥

यद्वैयके निषिद्धो
दाहो व्याधिसपार्थमपि विहित ।
ओपनिषेधोक्त नो
दु खकरत्व मतिक्षिपति ॥ ४४ ॥

किमिह प्रसक्तकथया
भावद्रव्यस्तवावुचितनीत्या ।
अन्योन्यसमनुविद्धौ
भरतो नियमेन मन्तव्यौ । ४५ ॥

द्रव्यस्तवोऽल्पशक्ते-
र्भावस्तव एव भवति गुरुशक्ते ।
पलशतभरासमर्थो
नहि वोढु पर्वत सहते ॥ ४६ ॥

१ षट्केतभेदन, दखथ ।

द्रव्यस्तवोऽत्र दानं
शेषा भावस्तथा सुपरिशुद्धा ।
संक्षिप्तैव सूत्रे
विस्तरतः स्वल्पपरिज्ञा न ॥ ५० ॥

---

एवंविधमन्यदपि
ज्ञानपरिज्ञादि वाचयति धीरः ।
ज्ञात्वा स्वशिष्यसम्पद्-
मुपयुक्तः प्रवचनहितेऽसौ ॥ ५१ ॥

---

अस्यैव परानुज्ञा
क्रियते गुणिनः कदाचिदन्यस्य ।
वदयति सहृदयगुरुपाद्
यस्माज्जिनशासनश्लाघा ॥ ५२ ॥

सूत्रार्थे निष्णात
प्रियदृढधर्मोऽनुवर्त्तनाकुशलः ।
गम्भीरो लब्धिनिधि
कृतकरणशुद्धजातिकुल ॥ ५३ ॥

प्रवचनदृढानुराग
सोपग्रहसङ्ग्रह॰ स्थिरप्रकृति ।
पुरुषोत्तम इह गच्छ-
स्वामी भणितो जिनवरेन्द्रे ॥ ५४ ॥

गीतार्था कृतकरणा
कुलजा परिणामिनी च गम्भीरा ।
चिरदीक्षिता च वृद्धा
प्रवर्तिनी सघती भणिता ॥ ५५ ॥

व्यूढो गणधरशब्दो
गौतमप्रमुखैः स्वयं पुरुषसिंहैः ।
यस्तमपात्रे धत्ते
जानानोऽसौ महापापः ॥ ५६ ॥

---

कालोचितगुणरहिते
स्वस्मिन् यः स्थापितं च तं शब्दं
अनुपालयति न सम्यग्
विशुद्धभावं स्वसयत्नापि ॥ ५७ ॥
युग्मम्

शब्दः प्रवर्तिनीति
व्यूढो यथार्थचन्दनाद्याभिः ।
यस्तमपात्रे धत्ते
जानानोऽसौ महापापः ॥ ५८ ॥

कालोचितगुणरहिता
या स्वस्या स्थापित च तं शब्दं ।
अनुपालयति न सम्यग्
विशुद्धभावा स्वतनस्यापि(५९॥ युग्मम्)

पददाने योग्यानां
गुरुतरगुणमलनया परित्यजना ।
शिष्या भवन्ति नियमा—
दाज्ञाकोपेन चात्मापि ॥ ६० ॥

तस्मात्तीर्थकराज्ञा—
राधननिरतो यथाक्तगुणपात्रे ।
गीतार्थो निश्चित्य
प्रवर्त्तिनीगणिपदे दत्ते ॥ ६१ ॥

दीक्षावयसो प्राप्तो
धृतिमान् पिण्डैषणादिविज्ञाता ।
पीठादिधर मोक्त
स्खलन्धियोग्योऽनुप्रवृत्तिपर ॥६२॥

अयमपि सार्द्धं गुरुणा
पृथगथ गुरुदत्तयोग्यपरिवार ।
विहरति तदभावे वा
विधिनैव समाप्तकल्पेन ॥ ६३ ॥

जातो जातश्च मतो
गीतार्थेतरकृतो द्विधा कल्प ।
पञ्चकतदूनभावात्
समाप्ततद्व्यत्ययविभिन्न ॥६४॥

ऋतुबद्धे वर्षासु च
सप्तसमाप्तस्तदूनकस्त्विनर ।
असमाप्ता जाताना
भवति हि नामान्ययोगेन ॥ ६५ ॥

भवति समाप्ते कल्पे
कृतेऽपि चान्योन्यसङ्गताना हि ।
गीतार्थसमेताना-
मुभयेषां तद् यथासमयम् ॥६६॥

सत्यपि गुणपद्धत्या
साभ्यधिका भवति शेषसान्वीक्ष्य ।
श्रुतदीक्षादिपरिणता
स्वलब्धियोग्या भवेदेषा ॥ ६७ ॥

आसां नहि स्वरूपेषु
सर्वं यद् गुरुपरीक्षित भाप ।
भवति च लघुत्वमाहुः
केचिदितीदं न युक्तिसहम् ॥६८॥

कालाचरणाभ्यां यत्
स्वम्भिपकचिते लघुस्त्वपि विपरी
जातसमाप्तविभाषा
सासामपि स्रुतां मृग्या ॥ ६९ ॥

अत्रानुज्ञार्थविधौ
शिष्य सस्थाप्य वामपार्श्वे तम् ।
देवान् वन्देत गुरु-
र्वन्दित्वा भणति शिष्योऽथ ॥७

अनुजानीत दिगादिक-
मिच्छाकारेण यूयमस्माकम् ।
इच्छाम इति तदर्थो-
त्सर्गं कुरुते गुरुरथोक्त्वा ॥ ७१ ॥

---

विधिनानुज्ञानन्दि-
माकर्षति सशृणोति शिष्यश्च ।
भणति पुनर्वन्दित्वा
प्रागुक्तं भावितस्वान्त ॥ ७२ ॥

---

साधारस्य दिगादि
क्षमाश्रमणहस्ततोऽहमनुजाने ।
भणति गुरुर्वन्दित्वा
शिष्योऽथ भणत्यशठचित्तः ॥७३॥

सन्दिशत किं भणामि
गुरु प्रवेदय तयेति वन्दित्वा ।
कृत्वा तद्वन्दित्वा
प्रवेदित भणति युष्माकम् ॥७४॥

सन्दिशत च साधूनां
प्रवेदयामि प्रवेदयेति गुरु ।
श्रुते ततश्च शिष्यो
वन्दित्वाऽऽकृष्यमङ्गलकम् ॥ ७५ ॥

कुरुते प्रदक्षिणां सद्-
गुरो स दत्त्वोपयोगवान् वासान् ।
देवादीनां शीर्षे
प्रक्षिपन् भणति ॥७६॥

वन्दूंस्त गुरुगुणैस्त्व
त्रीन वारानुपविशेद्विधायैवम् ।
शेष सामायिकवत्
द्विगनुज्ञार्थम्निवद्दोत्सर्गं ॥७७॥

उपविशति गुरुसमीपे
ततश्च शिष्य परे तु वन्दन्ते ।
स गुरुरप्यनुशास्ति
दृष्टाः मद्‌चो भवोधफलाम् ॥ ७८ ॥

उत्तमपदमुत्तमजन–
सेवितमिदमुत्तमोत्कृपासाद्य ।
धन्य पात्र गत्वा
लभते सुखमुत्तम कश्चित् ॥ ७९ ॥

त्वमसि च तादृग् गुणवान्
भिषग्वर प्राणिनां भवार्त्तानाम् ।
तत्र शरण मपन्ना
मोचयितव्यास्त्वया भव्या ॥८०॥

युष्माभिरपि च नाथ
मोक्तव्यो भववने महागहने ।
सिद्धिपुरसार्थवाह
क्षणमपि नित्य तु ससेव्य ॥८१॥

आज्ञाकोपोपरथा
स्यादतिदुःख मदस्तदेतस्य ।
निर्भर्त्सितैरपि पदौ
त्याज्यो कुलवधूज्ञातात् ॥८२॥

व्रतिनीनामप्येवं
गुरुरनुशास्ति करोति दर्शयति ।
पूर्वाचमसाध्वीनां
गुणान् पुनश्चन्दनाद्यानाम् ॥८३॥
भणति स्वलब्धिकमपि
मागमाता गुरुपरीक्षितैव तव ।
लब्धिवस्त्रादीनां
निर्दोषा पारतन्त्र्यवत ॥ ८४ ॥
सम्प्रति सूत्रापचो
जातोऽसि त्वमिति वस्तुनि भक्तवे ।
सम्यक् प्रवर्तितव्यं
बहुगुणलब्धिर्यथा भवति ॥८५॥
उत्थाय सपरिवार
स्त्रिगुरमथ भावत प्रदक्षिणयेत् ।
अथ पालयनि स गच्छ
शिष्यानिष्पादयनीत्या ॥ ८६ ॥

ईदृगगणिविहितगण'
व्यवहाराचरणमेव भव्यानाम् ।
दर्शयति मोक्षमार्गं
दीप इव गृहस्थित वस्तु ॥ ८७ ॥

भरते भृतेति शिथिले
कलिदोषादगलितसुविहितविहारे ।
स्थेय गुणार्थमगुणे-
ऽप्यग्रहिलग्रहिलनृपनीत्या ॥ ८८ ॥

अगुणादपि गुणवृद्धि
र्यदि भवति द्रव्यचन्दनादिभ्यः ।
तद्वकरादपि रत्नो-
इत्याहुराचार्या. ॥ ८९ ॥

हीनेऽपि गुणांशे तु
प्रायो भावेन वन्दनं न्याय्यम् ।
इत्थं मार्गाभ्युदय
कारणमिह कल्पभाष्योक्तम् ॥९०॥

निरुपक्रमकर्मवशा-
च्चित्य मागकदचदृष्टिरपि ।
चरणकरणे त्वशुद्धे
शुद्धं मार्गं प्ररूपयतु ॥ ९१ ॥

दर्शनशास्त्राभ्यासा-
द्धीनोऽपि पथप्रभावनोद्युक्तः ।
यल्लभते फलमतुलं
न तत् क्रियामात्रमग्नमतिः ॥ ९२ ॥

विफलक्रियाभिमाना-
दज्ञानाच्चरणशुद्धयभावेन ।
इदमित्थमेव गदित
यत् ' सम्मत्या ' महामतिना ॥ ९३ ॥

चरणकरणप्रहाणा
स्वसमयपरसमयमुक्तव्यापारा ।
चरणकरणस्य सारं
निश्चयशुद्धं न जानन्ति ॥ ९४ ॥

पर्यायद्रव्यगुणै-
रात्मज्ञानमिह कथ्यते बोधः ।
श्रद्धादर्शन-
च चारित्रम् ॥ ९५ ॥

इत्थं रत्नत्रयवा
प्राप्तोऽस्मि निर्विकल्पभावनिधौ ।
समभावात् सामायिक-
पदमहंचि सुपरिशुद्धा ॥ ९६ ॥
पवनादिव कल्लोला-
परपरिणामा विकल्पत पुंसः ।
स्थिरनिर्विकल्पवृत्ति
स्तिमितोदधिसन्निभे त्वस्मिन् ॥ ९७ ॥
आगन्तुकाद्विकल्पा-
न्निमित्तत प्रसरता स्वभावेन ।
कर्तृत्वाद्यभिमानात्
कर्माणूना स संसरति ॥ ९८ ॥
स्नेहालिङ्गितवपुषो
रेणुभिराश्लिष्यते यथा गात्रम् ।
रागद्वेषासक्तमते
कर्मस्कन्धैस्तथा श्लेष ॥ ९९ ॥

पश्यप्राटकयात्मा
तदनादिद्रव्यभावकर्मकृतम् ।
अन्तर्दशा स्वभावा-
न्न चलति भगवानुदासीन ॥ २०० ॥

---

अस्यां निमीलितायां-
मपि च व्यवहारधीनिमीलायाम् ।
अयमीदृगेव न मृगो
भवति मृगपति प्रसुप्तोऽपि ॥ २०१ ॥

---

कुरुते नहि परभावा-
न्न कारयत्यपि च नानुजानीते ।
परिणामाना स्वेषां
कर्त्ता च भोक्ता च ॥ २ ॥

परभावकर्तृचेतो-
वाक्कायाभेदमध्यवस्यन्त ।
दधने पराङ्मुखत्व
स्वभावठापमथाभूमे ॥ ३ ॥

---

नहि देहो न मनो
न चापि वाणी न कारण तेषाम् ।
ज्ञापकभावस्त्वह-
मिति रोधो भूमि स्वभावस्य ॥ ४ ॥

---

पुरुषत्वमेव मित्र
तव किं बहिरीहसे पर मित्रम् ।
उच्चालयिन रे त्व
दूरालयिक च जानीहि ॥ ५ ॥

इत्यादिभिरुपदेशै
सूत्रोक्तैर्मोक्षमार्गदुरुत्तरम् ।
मननात्मकस्य सिद्ध्य-
त्यनात्मभेदप्रबोधस्य ॥ ६ ॥

---

परमात्मा भिन्न स्यात्
परभेदज्ञानपरिणतो जीव ।
वैपम्यविनिर्मुक्त-
स्वरूपमात्रप्रकाशेन ॥ ७ ॥

---

क्षणमपि कर्मविलासो
परमे परमेष्ठिमानलग्नमति ।
घनसमयेऽपि रविरिव
प्रकाशते मेघनिर्मुक्त ॥ ८ ॥

आत्मस्वभावदर्शी
स्वैरं कर्मोपनीतफलगुरपि
लिप्येत न पापभरै-
रवशिष्टमुपप्लवं पश्यन् ॥ ९ ॥
मायोदकं यथावद्
पश्यन् यात्येव तेन मार्गेण ।
पश्यन्नलीकरूपान्
भोगान्नुल्लङ्घयत्यरम् ॥ १० ॥
तांस्तत्वेन तु जानन्
मग्नो भावेन मोहजं याले ।
उभयभ्रष्ट स्पष्टं
निरन्तरं खेदमनुभवति ॥ ११ ॥
अन्तःकरणध्यान-
प्रतिबन्धकघटनार्थमुद्युक्त ।
भोगैरपि लिप्तमति-
र्न भवत्याक्षेपकज्ञानात् ॥ १२ ॥

उभयपदाव्यभिचारो
भणित सम्यक्त्वमौनयो सूत्रे ।
अस्यामेव दशायां
घटते सम्यग्त्व चोऽयम् ॥ १३ ॥

---

सयमजन्यविशुद्धि-
स्तदानपायेति निश्चयस्थित्या ।
फलविषये व्यभिचारो
न सयमस्थानविरहेऽपि ॥ १४ ॥

---

तस्मादात्मज्ञाने
कार्य सतत मुमुक्षुणाभ्यास. ।
किमपरशास्त्रविकल्पै-
र्जातिप्रायै. कुतर्कोत्थै ॥ १५ ॥

आत्मज्ञानविरहिते
शास्त्रे शस्त्रे च कोऽपि न विशेषः ।
भ्राम्यन्ति मूढलोका
केवलमाकारभेदेन ॥ १६ ॥

---

आत्मज्ञानग्रन्था
पन्थानो ये तु मोक्षनगरस्य ।
गुरुतरगुणगुरुचरण-
प्रसादतस्तेऽनुसर्तव्या ॥ १७ ॥

---

एनां गुरोरधीत्य
श्रद्धते य इह मार्गपरिशुद्धिम्
परमानन्दं लभते
स 'यशोविजय' श्रिया पूर्णम् ॥१८॥

श्रीविजयदेवसूरौ
जयिनि श्रीविजयसिंहसूरौ याम् ।
प्राप्ते साम्राज्यभृति
श्रीमद्विजयप्रभाचार्ये ॥ १९ ॥

रुचिर सतीर्थ्यभाव
दधतां श्रीजीतविजयविबुधानाम्
श्रीनयविजयबुधानां
शिशुनाऽयं विरचितो ग्रन्थ ॥ ३२० ॥

इति श्री महोपाध्याय श्रीमद् यशोविजय
गणिना कृता मार्गपरिशुद्धि सम्पूर्णा॥

